॥ आर्षेयोपनिषत् ॥

ॐ ऋषयो वै ब्रह्मोद्यमाह्वयितवा ऊचुः परस्परमिवानुब्रुवाणाः ।
तेषां विश्वामित्रो विजितीयमिव मन्यमान उवाच । यदेतदन्तरे
द्यावापृथिवी अनश्नुवदिव सर्वमश्नवद्यदिदमाकाशमिवेतश्चेतश्च
स्तनयन्ति विद्योतमाना इवावस्फूर्जयमाना इव तद्ब्रह्मेति ।
तस्योपव्याख्यानम् । यदिदमग्निभिर्ज्वलयन्ति
पोप्लूययन्त्यद्भिरभिषीवयन्ति वद्ध्रीभिरभिग्रथ्नन्ति
वरत्राभिरभिघ्नन्त्ययोघनैर्विध्यन्ति सूचीभिः निखानयन्ति
शङ्कुभिरभितृन्दन्ति पड्वीशिकाभिरभिलिम्पन्ति मृत्स्नया
तक्ष्णुवन्ति वासीभिः कृष्णन्ति फलिभिर्नहैव शक्नुवत इति
नास्येशीमहि नैनमतीयीमहि ॥

तदु ह जमदग्निर्नानुमेने आर्तमिव वा एष तन्मेने
यदिदमन्तरेणैनदुपयन्ति पर्यास इवैष दिवस्पृथिव्योरिति ।
स होवाच अन्तरिक्षं वा एतद्यदिदमित्थेत्थोपव्याख्ये इति ।
महिमानं त्वमुष्येह पश्यामीति यदिदमस्मिन्ननन्वायत्तमिति । स
यदिदमेतस्मिन्ननन्वायत्तं वेदाथ तथोपास्तेऽन्वायत्तो हैवास्मिन् भवति ।
तदेतदविद्वानेवास्मिन्ननन्वायत्तमुपास्ते वीवपद्यत् आर्तिमृच्छेत् ।
तस्मादेवमेवोपासीत ॥

तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । तं होवाच ।
यदिदमिति द्यावापृथिव्योरनारम्भमिव नोपयन्ति नाभिचक्षते
नाश्नुवन्ति । तस्योपव्याख्यानम् । यदिदमितश्चेतश्चाण्डकोशा उदयन्ति
नापद्यन्त इव न विस्रंसन्त इव न स्खलन्तीव न पर्यावर्तन्त इव ।
न ह वा एनत्केचिदुपधावन्तो विन्दन्ति नाभिपश्यन्ति । यदिदमेक इदप (?)
एवाहुस्तम एके ज्योतिरेकेऽवकाशमेके परमं व्योमैक आत्मानमेक इति ॥

तदु ह भरद्वाजो नानुमेने । यदिह सर्वे वेत्थेत्थेति द्यूदिरे
नास्य तद्रूपं पर्याप्तमिति । स होवाच । आर्तमिवेदं ते विज्ञानमपि
स्विदेनद्रोदस्योरेव पर्यायेणोपवन्वीमहि यदिदमित्थेत्थोपव्याख्यास्याम
इति । महिमानं त्वेवास्योपासे । यदिदमत्रान्वायत्तमिति । स
यदिदमत्रान्वायत्तं वेदाथ तथैवोपास्तेऽत्रैवान्वायत्तो
भवति । स य इहान्वायत्तमिदमविद्वानेवैतदुपास्ते पापीयान्
भवत्यार्तिमार्च्छेत्यवम्रियते यदेवमेतदन्वायत्तमुपास्ते सर्वमायुरेति
वसीयान् भवति । स य एतदेनमुपास्ते ॥

तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । स होवाच ।
यदेतस्मिन् मण्डलेऽर्चिर्दीप्यते बम्भ्रम्यमाणमिव चाकश्यमानमिव
जाज्वल्यमानमिव देदीप्यमानमिव लेलिहानं तदेव मे ब्रह्म ।
तस्योपव्याख्यानं यदिदमद्धैव पराः परावतोऽभिपद्यन्ते
सम्पन्नमेवैतत् सम्मितमेव यथोपयातमात्मैवाभिचक्षत
इति । य एतदभिपद्येव गृह्णीयादथो विस्फुरन्तीव

धावन्तीवोत्प्लवन्तीवोपश्लिप्यन्तीव न हैवाभिपद्यन्ते । तदिदमन्तिके दवीयो नेदीय इव दूरतो न वा अस्य महिमानं कश्चिदेतीति ॥
तदु ह न मेने गौतमो यदिदमार्तमिव स्तिमितमिव पर्यायेण पश्यन्तीवेमं मोघं संविदाना इति ।
य इमे पुण्ड्राः सुह्माः कुलुम्भा दरदा बर्बरा इति ।
न ह वा असंविदाना एव द्रागिवाभि तत्पद्यन्त इति ।
महिमानं त्वेवास्योपासे । य एतदस्मिन्नन्तरे हिरण्मयः पुरुषो हिरण्यवर्णो हिरण्यश्मश्रुरानखाग्रेभ्यो दीप्यमान इव । स य एवमेनमुपास्तेऽतीव सर्वभूतानि तिष्ठन्ति सर्वमायुरेति वसीयान् भवति । न ह वा एष परमतीवोदेति । यस्त्वेनं परमतीवोद्यन्तं पश्यन्नुपास्ते पापीयान् भवति वीवपद्यत आर्तिमृच्छति । यस्त्वेनं परमनूद्यन्तं वेदाथ तथोपास्ते परं ज्योतिरुपसम्पद्यते सर्वमायुरेति वसीयान् भवति । स य एवमेनमुपास्ते ॥
तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । तं होवाच । विस्फुरन्तीरेवेमा लेलायन्तीरिव सञ्जिहाना इव नेदीयसितमा इव दवीयसितमा एव दवीयसितमा इव नेदीयसितमा एवेति । यदपि बहुधाचक्षीरन्न किञ्च प्रतिपद्यत इति तन्मे ब्रह्मेति ॥
तदु ह वसिष्ठो नानुमेने । यदिमा विस्फूर्जयत एवाभिपद्यन्ते वीवयन्ति मिथु चेति विचक्षतेऽकाण्ड इवेमा न ह वै परमित्था कश्चनाश्नोत्यसंविदान इव । अप ये संविद्रते तदेतदन्तर्विचक्षत इति । महिम्नः पश्येमा विजान इति । स य एवमिमा महिम्न एवास्य पश्यन्नुपास्ते महिम्न एवाश्नोति सर्वमायुरेति वसीयान् भवति । यस्त्विमा अवयतीरेवोपास्ते न परा सम्पद्यमाना नो एव परेति पापीयान् भवति वीवपद्यते प्रमीयते । अथ य इमाः परा सम्पद्यमाना एवोपास्ते परैव सम्पद्यते सर्वमायुरेति वसीयान् भवति ॥
तमितरः पप्रच्छ । कतमत् त्वमनार्तं मन्यस इति । महाविज्ञानमिव प्रतिपदेनाध्यवसायमिव यत्रैतदित्थेत्थेत्यभिपश्यति । अथ नेति नेत्येतदित्थेत्थेति । स वा अयमात्मा अनन्तोऽजरोऽपारो न वा अरे बाह्यो नान्तरः सर्वविद्वारूपो विघसः प्रसरणोऽन्तज्योतिर्विश्वभुक् सर्वस्य वशी सर्वस्येशानः सर्वमभिक्षिपन्न तमश्नोति कश्चन ॥
परोवरीयांसमभिप्रणुत्यमन्तर्जुषाणं भुवनानि विश्वा ।
यमश्नवन्न कुशिकासो अग्निं वैश्वानरमृतजातं गमध्ययी ॥ १॥
भरेभरेषु तमुपह्वयाम प्रसासहिं युध्यमिन्द्रं वरेण्यम् ।
सत्रासा [ह] मवसे जनानां पुरुहूतमृग्मिणं विश्ववेदसम् ॥ २॥
अहिघ्नं तमर्णवे शयानं वावृहाणं तवसा परेण ॥ ३॥
तदु ह प्रतिपेदिरे । ते वाभिवाद्यैवोपसमीयुः । नमोऽग्नये । नम इन्द्राय । नमः प्रजापतये । नमो ब्रह्मणे । नमो ब्रह्मणे ॥
इत्यार्षेयोपनिषत् समाप्ता ।